Pushpadantacharya

Pushpadantakrilā mahima stotra

पुष्पदंतकृत महिम्न स्तोत्र सटीक Satika

Samskrit

Paper – Printed

1814 Sakabda (126 years old)

11 Folio

10.6" X 5.4"

Complete

१०९२३ नं. २७२ (३५)

॥ अथ पुष्पदंतकृतमहिम्न स्तोत्र सटीक प्रारंभः ॥

श्रीगणेशायनमः ॥ हेपरम हेभगवन् तेतवमहिम्नःपरंपारं अविदुषःअजानतःपुरुषस्य स्तुतिर्वादः यदि अस दृशीस्यात् अननुरूपा अयोग्याभवेत् तर्हि किंचित्रं।तथाब्रह्मादीनामपिगिरस्त्वयिविषयेअवसन्नाःनिष्फला भवेयुः तत्तस्मात्कारणान्नकेवलमस्माकमेवस्तुतेरनधिकारित्वं।किंतु ब्रह्मादीनामपितथैवस्यादित्यर्थः। सर्वे षामेवअनेनपूर्वार्द्धेनस्तुतेरनधिकारित्वंप्रतिपादितं।उत्तरार्द्धेनसाधिकारित्वंप्रतिपादयन्नाह।हेभगवन् यतः

महिम्नःपारंतेपरमविदुषोयद्यसदृशीस्तुतिर्ब्रह्मादीनामपितदवसन्नास्त्वयिगिरः॥अथाऽ
वाच्यःसर्वःस्वमतिपरिणामावधिगृणन्ममाऽप्येषःस्तोत्रेहरनिरपवादःपरिकरः ॥ १ ॥
अतीतःपंथानंतवचमहिमावाङ्मनसयोरतद्व्यावृत्त्यायंचकितमभिधत्तेश्रुतिरपि ॥

सर्वःसमस्तोपिजनःस्वमतिपरिणामावधि स्वकीयामतिःस्वमतिःतस्याःपरिणामःपरिपाकःसोऽवधिःसीमा मर्यादायत्र स्वमतिपरिणामावधियथाभवति एवंगृणन्स्तुवन् अवाच्योऽनुग्राह्योभवति निर्दोषएव। यदेवंतर्हि हेहर हेदीनार्तिहर अस्मिन्स्तोत्रेममापि एषः परिकरः प्रारंभो निरपवादोनिर्दोषएवेत्यर्थः॥१॥हेभगवन् यस्त वमहिमा वाङ्मनसयोः पंथानं अतीतएव लंघितवान् मार्गमतिक्रांतः । वाक मनश्चवाङ्मनसी तयोर्वाङ्म नसयोः एतेचकिलवाङ्मनसीसर्वार्थविषयिणी ताभ्यामपितवमहिमाअवधारयितुंपरिज्ञातुंनशक्यते नप्रत्य

म. म. क्षेण अनुमानेनच गृह्यते।सकः यंतवमहिमानं श्रुतिरपिवेदोऽपि चकितं अभिधत्ते भीतंभीतंब्रूते न निश्चयतः। म.
कथा अतद्व्या वृत्त्या न तत् अतत् अतद्रूपा चासौ व्यावृत्तिश्च अतद्व्यावृत्त्या।स इत्थंभूतो महिमाकस्यस्तोतव्यः
॥ १ ॥ अपितु नकस्यापीत्यर्थः।तथाकतिविधगुणः तस्यभगवतः कियंतोगुणाः तत्परिज्ञातुंनशक्यते । कस्याविषयः क
स्यगोचरोभवदपितुनकस्याऽपीत्यर्थः। एतेननिष्कलस्वरूपे स्तुतेरनधिकारित्वंप्रतिपादितं सकलेतु सावका

सकस्यस्तोतव्यःकतिविधगुणःकस्यविषयःपदेत्वर्वाचीनेपततिनमनःकस्यनवचः ॥२॥
मधुस्फीतावाचःपरमममृतंनिर्मितवतस्तवब्रह्मन्किंवागपिसुरगुरोर्विस्मयपदम् ॥ मम
त्वेतांवाणींगुणकथनपुण्येनभवतःपुनामीत्यर्थेऽस्मिन्पुरमथनबुद्धिर्व्यवसिता ॥ ३ ॥

शत्वमस्तीतिप्रतिपादयन्नाह । पुनःअर्वाचीने सृष्टिस्थितिप्रलयमुख्यतयाऽत्मन्यनुग्रहकेपदेस्थानेतु कस्यम
नःनपतति वचोवाक्कस्यनप्रसरति अपितुसर्वेषामपिमनोवचश्च प्रसरत्येवेत्यर्थः॥ २॥भगवतः अशेषशास्त्रक
र्तृत्वप्रतिपादनाय आत्मनश्चौद्धत्यपरिहारायस्तुवन्नाह। हेब्रह्मन् हेभगवन् ममस्तुत्यातवतुष्टिर्नास्त्येव किंकु
र्वतस्तववाचोगिरोविनिर्मितवतः सृष्टवतः । कथंभूताः वाचः मधुस्फीताःमधुवत्स्फीताः कोमलाःमाधुर्यगु ॥ १ ॥
णयुक्ताः सालंकाराइत्यर्थः। पुनःकथंभूताःपरमं अमृतंपरमामृतस्वरूपास्तथोच्यंते उपचाराद्वेदांतसिद्धांत

निष्ठाः। एतेनकिमुक्तम्। एवंविधाः स्वर्गापवर्गयोर्निष्ठावाचोगिरोनिर्मितवतः सुरगुरोरपिवाक् किंविस्मयप दंनभवतिआश्चर्यस्थानंनभवति अपितुभवतीत्यर्थः। किंपुनरस्मदादेः। अहोयद्येवंतर्हिकिमर्थंस्तुतौप्रवर्तसे। सत्यं। तुपुनः हेपुरमथन त्रिपुरदहन अस्मिनस्तुतिलक्षणेऽर्थेममबुद्धिरितिहेतोः व्यवसिताकृतोद्यमा । इति किं। अहंभगवतोगुणकथनपुण्येनएतांआत्मीयांवाणींपुनामिपवित्रीकरोमीत्यर्थः ॥३॥ आत्मनःस्तुतेः सा वकाशत्वंअव्यभिचारित्वंच प्रतिपाद्य इदानींसर्वज्ञत्वंसर्वकर्तृत्वंप्रतिकेचिद्विप्रतिपद्यंतेमीमांसकादयस्तन्म

तवैश्वर्यंयत्तज्जगदुदयरक्षाप्रलयकृत्त्रयीवस्तुव्यस्तंतिसृषुगुणभिन्नासुतनुषु ॥ अभव्या
नामस्मिन्वरदरमणीयामरमणींनिहंतुंव्याक्रोशींविदधतइहैकेजडधियः ॥ ४ ॥

तनिराकरणाय अनवद्यप्रमाणेनोपमन्यासपरेण श्लोकत्रयेणभगवंतंस्तुवन्नाह। हे वरद देभगवन् यत्तवैश्व र्यंतद्व्यस्तंनिक्षिप्तंआरोपितं। कासूतिसृषुतनुषु। कथंभूतासु गुणभिन्नासु गुणाःसत्वरजस्तमांसितैर्भिन्नाःपृ थक्भूताःगुणभिन्नास्तासु। कथंभूतंतवैश्वर्यं जगदुदयरक्षाप्रलयकृत् त्रयाणांजगतां उदयःउत्पत्तिः रक्षापरि पालनं प्रलयोविनाशश्चेति भगवतस्तवैश्वर्यंकरोति। पुनःकथंभूतं त्रयीवस्तुत्रयीशब्देनवेदत्रयी अथवा ब्रह्म विष्णुरुद्रात्मकंरूपं। हे भगवन् इहमर्त्यलोके एकेजडधियोमंदमतयः पापिष्ठामीमांसकादयस्तवैश्वर्यंनिहं

 तुंस्फोटयितुंनिराकर्तुंव्याक्रोशींनिंदांविदधतेकुर्वंति। कथंभूतांव्याक्रोशींअभव्यानांपापिष्ठानांरमणीयांमनो 
रमां पुनःकथंभूतांअस्मिन्सर्वज्ञत्वादिगुणोपेतेतवैश्वर्ये शुद्धमतीनांपंडितानांअरमणींअमनोरमाम् ॥ ४ ॥
 इदानींतामेवव्याक्रोशींप्रकटयन्नाह। खल्वितिनिश्चितं स धाता स कर्ता त्रिभुवनंसृजति त्रिभुवनजननेका
ईहाकाचेष्टाकापरिस्पंदक्रिया । तथा किंकायःसन् त्रिभुवनंसृजति । तथा किमुपायः सन् धाता त्रिभु

किमीहःकिंकायःसखलुकिमुपायस्त्रिभुवनंकिमाधारोधातासृजतिकिमुपादानइतिच ॥
अतर्क्यैश्वर्येत्वय्यनवसरदुःस्थोहतधियःकुतर्कोऽयंकांश्चिन्मुखरयतिमोहायजगतः॥५॥
अजन्मानोलोकाःकिमवयववंतोपिजगतामधिष्ठातारंकिंभवविधिरनादृत्यभवति ॥

वनंसृजति। किमुपादानं किंकारणं किंनिमित्तंच । अयमतिकुतर्कःकांश्चिद्धतधियोमंदमतीन्मुखरयतिवा
चालयति। किमर्थंजगतोमोहायलोकप्रतारणाय नरकगमनाय। कथंभूतःकुतर्कः त्वयिविषये अनवसरदुःस्थः
अवसरो अवकाशः नअवसरः अनवसरस्तेनदुःस्थःदुर्बलस्तुच्छइत्यर्थः । कथंभूतेत्वयि यतर्क्यैश्वर्येअचिं
त्यमहत्वे। उक्तंहि इच्छयाकुरुतेदेहमिच्छयावितनुर्भवेत्। क्रीडतेभगवान्लोकेबालःक्रीडनकैरिव ॥ ५ ॥ 
हेभगवन् अमी भूर्भुवःस्वःप्रभृतयःसप्तलोकाःअवयववंतोपि किंअजन्मानःएषांजन्म नविद्यते। अद्यत्सावयवं

तत्तज्जन्मयुक्तंयथाघटः। तथालोकाःसावयवाःसावयवत्वाज्जन्मवंतएव। हेभगवन् भवविधिःसृष्टिविधिःसृष्टिविधानं जगतां अधिष्ठातारंचेतनंनिमित्तकारणमीश्वरंअनादृत्यभवतिकिंअनपेक्ष्यभवति। नैवकर्तारंसपेक्षत।एवंदिक्कालधर्माधर्मपरमाणुप्रभृतीनिचेतनाधिष्ठानस्वीकृतानिस्वकार्योत्पत्तौप्रवर्तंते।यच्चेतनशून्यानितच्चेतनाधिष्ठानस्वीकृतकार्योत्पत्तौप्रवर्तंते।अथवाभिधीयते यदिअनीशःकुर्यात्तन्महैश्वर्यबहिर्भूतः कश्चित्कु

अनीशोवाकुर्याद्भुवनजननेकःपरिकरोयतोमंदास्त्वांप्रत्यमरवरसंशेरतइमे ॥ ६ ॥

त्रयीसांख्यंयोगःपशुपतिमतंवैष्णवमितिप्रभिन्नेप्रस्थानेपरमिदमदःपथ्यमितिच ॥

रुचीनांवैचित्र्यादृजुकुटिलनानापथजुषांनृणामेकोगम्यस्त्वमसिपयसामर्णवइव ॥ ७ ॥

र्यात् तदाऽस्यअनीशस्य भुवनजनने भुवनोत्पादनविधौ कःपरिकरःकासामग्री। हेअमरवर यतःकारणादिमेमंदाःपापिष्ठाःमीमांसकादयः त्वांप्रतिसंदेहंकुर्वंति। संप्रतिसंदेहोनास्तीतितात्पर्यार्थः। ईश्वरंविनानान्यः समर्थइत्यर्थः ॥६॥ त्रयीवेदविहितोमार्गःसांख्यंकापिलंशास्त्रंपंचविंशतितत्त्वोपलक्षितंवा तथायोगसंबंधः योगःपातंजलात् साधनत्वात् न्यायशास्त्रंवैशेषिकशास्त्रं तथापशुपतिमतंशैवागममतेनसिद्धांतःएकोमार्गः।तथावैष्णवंनारदपंचरात्रागममतेनसिद्धांतएकोमार्गः।इत्यनेनप्रकारेणप्रस्थानेमार्गे प्रभिन्ने नानात्वं

 गतेसति अहंकारोपेतास्तदनुष्ठायिनः इतिब्रुवते।इदंपरंतत्वंनास्मात्परमस्तीति अदःपथ्यंसेव्यंग्राह्यंचतस्मा स
त्सेवनीयमस्ति।इत्येवंप्रकारणरुचीनांइच्छानांवैचिच्यात् भिन्नत्वात् अतोरुचयोविचित्राः ।यदुक्तं एकमेवपरं
॥ ३ ॥ तत्वमभिन्नंपरमार्थतः।तदेकरुचिवैचित्र्यान्नानात्वंसमुपागतं ॥हेभगवन् ऋजुकुटिलनानापथजुषांत्वमेवेकः
गम्योऽसि। केषांकइव पयसांअर्णवः समुद्रोयथागम्यस्तथात्वं ॥ ७ ॥ अहो हेवरद तव इयत् इदं तंत्रोप

महोक्षःखट्वांगंपरशुरजिनंभस्मफणिनःकपालंचेतीयत्तववरदतंत्रोपकरणम् ॥
सुरास्तांतामृद्धिंविदधतिभवद्भूप्रणिहितांनहिस्वात्मारामंविषयमृगतृष्णाभ्रमयति ॥८॥

करणं तंत्ररूपेणप्रपंचरूपेणस्थितमुपकरणमुपकारकमित्यर्थः।महांश्चासावुक्षावृषभश्चेतिमहोक्षः खट्वांगंप्रसिद्धं
दंडस्योपरिब्रह्मकपालेखट्वांगमुच्यते। तथापरशुरायुधविशेषःअजिनंगजचर्म तथाभस्म दग्धगोमयं फणिनः
काद्रवेयाःनागाः तथाकपालंशिरोस्थिच। इतिशब्दःसमाप्तौ सुराः इंद्रादयोदेवाः भवद्भूप्रणिहितांभ्रूक्षेपमात्रे
णनितरांदत्तामित्यर्थः।ऋद्धिंसंपदंविदधातिधारयंति। अहोयद्येवंतर्हिकथंस्वयंनभुंक्ते नचैवंवाच्यं।हियस्मात् ॥ ३ ॥
विषयमृगतृष्णा स्वात्मारामंपुरुषंयोगिनंनभ्रमयतिनचालयति।एतेनभगवतःपरमयोगित्वंप्रकटितं ॥ ८ ॥

हेपुरमथन त्रिपुरदाहक कश्चिदतद्दर्शनानुयायिसर्वमिदंजगत् ध्रुवंनित्यंगदति नकदाचिदनीदृशंजगदिति अ
विनश्वरंकथयति। अथअपरोबौद्धः सकलंजगदिदं अध्रुवंक्षणिकंगदति। परस्ततोन्यः वीतरागीमध्यस्थः
एतस्मिन्समस्तेऽपिजगति ध्रौव्याध्रौव्ये नित्यानित्यत्वे व्यस्ताविषयेनिक्षिप्तप्रमाणेवदति। आकाशादिपं
चकंनित्यं घटपटादिकमनित्यमितिब्रूतइत्यर्थः। एवंनानाप्रकारेण तैर्वादिभिर्विस्मितइवमोहंप्राप्तइवाहं

ध्रुवंकश्चित्सर्वंसकलमपरस्त्वध्रुवमिदंपरोध्रौव्याध्रौव्येजगतिगदतिव्यस्तविषये ॥
समस्तेऽप्येतस्मिन्पुरथनतैर्विस्मितइवस्तुवन्जिह्रेमित्वांनखलुननुधृष्टामुखरता ॥ ९ ॥
तवैश्वर्यंयत्नाद्यदुपरिविरिंचोहरिरधःपरिच्छेत्तुंयातावनलमनलस्कंधवपुषः ॥

त्वांस्तुवन् जिह्रेमि लज्जे। अहोयद्येवंतर्हि किमर्थंस्तुतौप्रवर्तसे तत्राह। ननु अहो खलुनिश्चयेन मुखरता
वाचालतानधृष्टा अपितुधृष्टैवेत्यर्थः ॥ ९ ॥ हेभगवन् विरिंचोब्रह्माउपरितनपक्षे हरिःकृष्णःअधःपक्षे तवै
श्वर्यं यत्नात्परिच्छेत्तुं एतावद्धीतिनिश्चेतुंअनलंयातौअसमर्थौभूतौ।कथंभूतस्यतव अनलस्कंधवपुषःअनल
स्कंधोऽग्निसमूहो वपुः शरीरंयस्यतव। क्वचिदनिलस्कंधवपुषइतिपाठस्तत्रवायुशरीरस्य। एतेनकिमुक्तं वा
युतत्त्वपर्यंतंलिंगस्यमस्तकं कालाग्निपर्यंतंलिंगस्यमूलं ब्रह्माब्रह्मांडव्यापी विष्णुर्भगवान् अप्तत्त्वनिवासी

कथमेतौतवैश्वर्यंपरिज्ञातुंसमर्थौस्यातामिति । अपितुनभवतइत्यर्थः । ततोनंतरंताभ्यां ब्रह्मविष्णुभ्यां त
वैश्वर्यैस्वयंतस्थेस्वेनैवप्रकाशितामित्यर्थः । आत्मानंआत्मनैवप्रकटयामास । किंकुर्वद्भ्यांताभ्यां भक्तिश्रद्धा
भरगुरुगृणद्भ्यां भक्तिर्भजनं श्रद्धाविश्वासः तयोर्भरेणमहत्त्वेनगुरुयथाभवति एवंगृणद्भ्यां । ताभ्यामित्यत्रता
दर्थ्येचतुर्थी । यद्यस्मात्कारणात् हेगिरिश तवअनुवृत्तिः सेवा किंनफलतिअपितुफलत्येवेत्यर्थः ॥ १०॥

ततोभक्तिश्रद्धाभरगुरुगृणद्भ्यांगिरिशयत्स्वयंतस्थेताभ्यांतवकिमनुवृत्तिर्नफलति ॥१०॥
अयत्नादापाद्यत्रिभुवनमवैरव्यतिकरंदशास्योयद्बाहूनभृतरणकंडूपरवशान् ॥
शिरःपद्मश्रेणीरचितचरणांभोरुहबलेःस्थिरायास्त्वद्भक्तेस्त्रिपुरहरविस्फूर्जितमिदम् ॥११॥

हेत्रिपुरहर दशास्योरावणोऽयत्नादनायासेन त्रिभुवनंत्रिलोकं अवैरव्यतिकरंशत्रुसंपर्करहितं आपाद्यसंपा
द्यकृत्वा रणकंडूपरवशान् रणेकंडूःखर्जूः तयापरवशान्तदधीनान् युद्धलंपटान् बाहूनभृतधृतवान् इति
यत् तदिदं स्थिरायास्त्वद्भक्तेर्विस्फूर्जितंविलसितं।कथंभूतायास्त्वद्भक्तेः शिरःपद्मश्रेणीरचितचरणांभोरुहब
लेः शिरांस्येवयानिपद्मानितेषांश्रेणीपंक्तिः तयारचितानिर्मिताचरणांभोरुहयोः पादपद्मयोःबलिःपूजोपहा
रोयस्यां तस्याःत्वयिभक्तेःफलंनिरूपितम् ११इदानींत्वयितिरस्कारफलंनिरूपयितुमाह।अमुष्येति।अमुष्य ॥ ४ ॥

रावणस्य पातालेरसातलेऽपि प्रतिष्ठास्थितिः अलभ्यादुर्लभाआसीत्। किंभूतस्य भुजवनंभुजसमूहं बला तशक्त्या त्वदधिवसतौतवनिवासस्थानेकैलासे विक्रमयतः। किंभूतंभुजवनं त्वत्सेवासमधिगतसारं त्वत्से वयाभवदाराधनेनसमधिगतः प्राप्तःसारोबलंयेन तत्तथोक्तं। कस्मिन्सति त्वयिअलसचलितांगुष्ठशिरसि सति अलसेनअनायासेनअप्रयत्नेनचलितंअधःकृतंअंगुष्ठशिरोयेनसोऽलसचलितांगुष्ठशिरास्तस्मिन्सति

अमुष्यत्वत्सेवासमधिगतसारंभुजवनंबलात्कैलासेपित्वदधिवसतौविक्रमयतः ॥
अलभ्यापातालेप्यलसचलितांगुष्ठशिरसिप्रतिष्ठात्वय्यासीद्ध्रुवमुपचितोमुह्यतिखलः १२
यदृद्धिंसुत्राम्णोवरदपरमोच्चैरपिसतीमधश्चक्रेबाणःपरिजनविधेयत्रिभुवनः ॥

अहोयुक्तमेतत्। ध्रुवंनिश्चितंउपचितःपरयाछक्ष्म्यासंपन्नःसमृद्धःखलोदुर्जनः मुह्यतिमोहमुपगच्छति॥१२॥ इदानींबाणासुरानुग्राहिणंभवंस्तुवन्नाह।यतइतिबाणोबाणासुरःसुत्रम्णोवासवस्य ऋद्धिंसंपदंसुरेंद्रत्वंअधश्च क्रे।कथंभूतांऋद्धिं परमोच्चैरपिसतीमत्यंतमहतीमपि हेभगवन्। युक्तमेतत्। तस्मिन्बाणेताच्चित्रमाश्चर्यंनभव ति।कथंभूतोबाणः। परिजनविधेयत्रिभुवनः परिजनस्येवसेवकस्येवविधेयंवश्यंत्रिभुवनंयस्यस तथोक्तः।

म. म्न. कथंभूतेतस्मिन् तवचरणयोर्वरिवसितरी तवशुश्रूषकेयुक्तमेतदित्याह। हेवरद त्वयिशिरसः अवनतिःप्रणा स.
मः कस्यापिउन्नत्यैनभवति अपितुसर्वेषामेवऐश्वर्यदात्रीभवतीतितात्पर्यार्थः ॥ १३ ॥ हेत्रिनयन विषंका
॥ ५ ॥ लकूटंसंहृतवतः गिलितवतस्तव कंठेगलेयः कल्माषः कृष्णपांडुरोवर्ण आसीत् स श्रियंशोभां नु इति
वितर्के नकुरुते अपितुकरोत्येव। कथंभूतस्यतव। अकांडब्रह्मांडक्षयचकितदेवासुरकृपाविधेयस्य अकांडेअ

नतास्त्रिंतस्मिन्वरिवसितरित्वच्चरणयोर्नकस्याऽप्युन्नत्यैभवतिशिरसस्त्वय्यवनतिः॥१३

अकांडब्रह्मांडक्षयचकितदेवासुरकृपाविधेयस्यासीद्यस्त्रिनयनविषंसंहृतवतः ॥

सकल्माषःकंठेतवनकुरुतेनश्रियमहोविकारोऽपिश्लाघ्योभुवनभयभंगव्यसनिनः॥ १४ ॥

प्रस्तावे ब्रह्मांडक्षयेनजगत्प्रलयेनचकिताः येदेवासुरास्तेषुकृपाविधेयायस्यतत् कृपापरस्य।ननुशुद्धस्फटिक
संकाशे नीलत्वलक्षणविकारः कथंशोभांकुरुतइत्याह।अहोयुक्तमेतत्। भुवनभयभंगव्यसनिनःपुरुषस्य वि
कारोपि श्लाघ्यः ॥ १४ ॥ हेभगवन् यस्यस्मरस्याविशिखाःबाणाःसदेवासुरनरे देवाश्चअसुराश्चनराश्चतैःसह
वर्तत इतिसदेवासुरनरं तस्मिन्जगतिलोके स्वर्गमृत्युपातालेऽपीत्यर्थः।असिद्धार्थाःअकृतकार्याःक्वचिदपि ॥ ५ ॥
नैवानिवर्तंते किंतु कृतकार्याभवंतीत्यर्थः।किंभूतस्य स्मरस्य नित्यंजायिनःजयशीलस्य।हेईश सस्मरस्त्वामि

तरसुरसाधरणंअन्यदेवतुल्यंपश्यन् स्मर्तव्यात्माअभूत्स्मरणीयशरीरोबभूव तथानदृष्टइत्यर्थः । कथंभूता विशिखाः जयिनोजययुक्ताः । हि युक्तमेतत् वशिषुजितेंद्रियेषुपरिभवोऽनादरः नपथ्यःनसुखकारीइत्यर्थः ॥ १५ ॥ हेभगवन् त्वंजगद्रक्षायैजगतांरक्षणाय रक्षसांप्रतारणायच नटसिनृत्यसितांडवंकरोषि । महीपृथ्वी पादाघातात्पादताडनात् चरणविन्यासात् सहसाशीघ्रं किमुत्पद्यतिकिमधःप्रविशतीतिसंशयपदंव्रजाति।अ

असिद्धार्थानैवक्वचिदपिसदेवासुरनरेनिवर्तंतेनित्यंजगतिजयिनोयस्यविशिखाः ॥
सपश्यन्नीशत्वामितरसुरसाधारणमभूत्स्मरःस्मर्तव्यात्मानहिवशिषुपथ्यःपरिभवः॥१५॥
महीपादाघाताद्व्रजतिसहसासंशयपदंपदंविष्णोर्भ्राम्यद्भुजपरिघरुग्णग्रहगणम् ॥

स्तिनास्तीतिसंदेहंगच्छतीत्यर्थः । तथा विष्णोः पदमाकाशं भ्रम्याद्भुजपरिघरुग्णग्रहगणमभूत् भ्राम्यद्भिर्भु जरूपपरिघैः भुजस्थैः परिघैर्वा रुग्णोभग्नोग्रहगणः सोमपात्रसमूहोयत्र तत्तथा । यागादिशुभकर्माणियदाध्वं स्यंतइत्यर्थः । भ्राम्यद्भुजप्रहारेणभग्नोग्रहगणसमूहोवर्तते । तथाद्यौःस्वर्गःमुहुःवारंवारंदौस्थ्यंयाति । कथंभू ताद्यौः अनिभृतजटाताडिततटा अनिभृताः असंवृताःयाःजटास्ताभिस्ताडितंतटंप्रांतदेशोयस्याः सातथो क्ता । ननु अहो युक्तमेतत् । यतोविभोः विभुताप्रभुता वामैव । वैपरीत्यंविभुत्वंक्वचिद्भवतीत्यर्थः ॥ १६ ॥

म. म्न. वियद्व्यापीति । हेभगवन् वारां तोयानांप्रवाहः ओघः यःसते तव शिरसि पृषतलघुदृष्टः जलकणिकावत्सू स.
क्ष्मोदृष्टः।कथंभूतो वियद्व्यापीव्योमवत् व्यापनशीलः । पुनःकिंभूतः तारागणगुणितफेनोद्गमरुचिः ताराःन
॥ ६ ॥ क्षत्राणि तेषांसमूहस्तेन गुणिताउपमिलिता शंकितेतियावत्।फेनोद्गमस्यडिंडिरोत्पत्तेः रुचिःशोभायस्य स
तेनप्रवाहेणजगत् द्वीपाकारंकृतंजलमध्यस्थित्तोभूखंडोद्वीपः तद्रूपमकारि।किंविधं जलधिवलयं जलधिः स

मुहुर्द्यौर्दौस्थ्यंयात्यनिभृतजटाताडिततटाजगद्रक्षायैत्वंनटसिननुवामैवविभुता ॥ १६ ॥
वियद्व्यापीतारागणगुणितफेनोद्गमरुचिःप्रवाहोवारांयःपृषतलघुदृष्टःशिरसिते ॥
जगद्द्वीपाकारंजलधिवलयंतेनकृतमित्यनेनैवोन्नेयंधृतमहिमदिव्यंतववपुः ॥ १७ ॥

मुद्रोवलयः परिखायस्यतत् । अनेनैवहेतुना तवदिव्यंसदानंदात्मकंवपुःशरीरंधृतमहिमेत्युन्नेयं ऊहनीयं
धृतोभृतो महिमा सर्वज्ञत्वंसर्वकर्तृत्वंचयेनतत् ॥ १७ ॥ रथइति । हेदेव त्रिपुरतृणंदिधक्षोर्दग्धुमिच्छोस्तेत
व कोयं आडंबरविधिः कोयंसंभ्रमः । अयंसंभ्रमः किमर्थमितियावत्।तमेवाडंबरंदर्शयितुमाह।रथःक्षोणीभू
मिः यंतासारथिःशतधृतिः ब्रह्मा।अगेंद्रोहिमवान्धनुःअथोअनंतरं रथांगेरथचक्रेचंद्रार्कौसोमसूर्यौरथचरणपा ॥ ६ ॥
णिः विष्णुः शरोबाणः इतिशब्दः प्रकारवचने अर्थवान्।युक्तमेवैतत्।प्रभुधियः स्वामिनांबुद्धयः परतंत्राःन

खलु फलप्रधानाः नभवंति यावत्फलंसिद्ध्यतितावदेवसंपादयंतीत्यर्थः। किंविधाः प्रभुधियः। विधेयैर्भृत्यैर्ज नैःसह क्रीडंत्योविनोदयंत्यः। त्रिपुरएवतृणंत्रिपुरतृणम् ॥१८॥ हेत्रिपुरहर। हरिर्नारायणस्तेतव पदयोश्चर णयोःसाहस्रंसहस्रसंख्योपेतं कमलबलिंआधायनिक्षिप्य तस्मिन्बलौएकोनेएकेनकमलेनहीनेसति।निजं आत्मीयंयन्नेत्रकमलंकमलाकारंनेत्रंउदहरदुद्धृतवान्। असौभक्त्युद्रेकःभक्त्यतिशयःचक्रवपुषाचक्ररूपेणपरि

रथःक्षोणीयंताशतधृतिरगेंद्रोधनुरथोरथांगेचंद्रार्कौरथचरणपाणिःशरइति ॥
दिधक्षोस्तेकोयंत्रिपुरतृणमाडंबरविधिर्विधेयैःक्रीडंत्योनखलुपरतंत्राःप्रभुधियः॥ १८॥
हरिस्तेसाहस्रंकमलबलिमाधायपदयोर्यदेकोनेतस्मिन्निजमुदहरन्नेत्रकमलम् ॥
गतोभक्त्युद्रेकःपरिणतिमसौचक्रवपुषात्रयाणांरक्षायैत्रिपुरहरजागर्तिजगताम् ॥ १९॥

णतिंपरिणामंगतःप्राप्तःसन् त्रयाणांजगतांस्वर्गमर्त्यपातालानांरक्षायैत्राणाय जागर्ति।प्रबुद्धयाप्रमत्तस्तिष्ठती त्यर्थः १९ हेगभवन्।जनोलोकःअतःकारणात्कर्मसुयोगेषुविषये दृढपरिकरोदृढारंभोकृतप्रयत्नइतियावत्व र्तते।किंकृत्वा श्रुतौवेदवाक्येश्रद्धांबध्वाविश्वासंकृत्वा।पुनःकिंकृत्वा।त्वांक्रतुषुयज्ञेषुफलदानप्रतिभुवं फलप्र दातारंसंप्रेक्ष्यविचार्य क्रतौयागेसुप्तेविनष्टेसति फलयोगेस्वर्गादिफलसंबंधे स्वंजाग्रदसि फलदानायत्वंसाव

म. म्न. धानोसि । कथमेतदित्याह । क्रतुमतांयज्वनांपुरुषणा प्रध्वस्तंकर्म पुरुषाराधनमृते ईश्वराराधनंविना स.
॥ ७ ॥ क्कफलतिनकुत्रापिफलतीत्यर्थः ॥ २० ॥ हेशरणद । हेअभयप्रद दक्षोदक्षप्रजापतिः क्रियादक्षः क्रियासुय
ज्ञक्रियासुदक्षःकुशलः क्रतुपतिर्यजमानः तथातनुभृतांशरीरिणामधीशः अधिपतिः प्रजापतित्वात् । यथा
ऋषीणामार्त्विज्यं ऋषयोवसिष्ठादयएवऋत्विजइत्यर्थः। तथासुरगणाः देवसमूहाः सदस्याःसभ्याः । एवंवि

क्रतौसुप्तेजाग्रत्त्वमसिफलयोगेक्रतुमतांक्वकर्मप्रध्वस्तंफलतिपुरुषाराधनमृते ॥
अतस्त्वांसंप्रेक्ष्यक्रतुषुफलदानप्रतिभुवंश्रुतौश्रद्धांबध्वादृढपरिकरःकर्मसुजनः ॥ २० ॥
क्रियादक्षोदक्षःक्रतुपतिरधीशस्तनुभृतामृषीणामार्त्विज्यंशरणदसदस्याःसुरगणाः ॥
क्रतुभ्रंशस्त्वत्तःक्रतुषुफलदानव्यसनिनोध्रुवंकर्तुःश्रद्धाविधुरमभिचारायहिमखाः ॥ २१ ॥

धसामग्रीकस्यदक्षस्यत्वत्तःसकाशात्क्रतुभ्रंशः यागविनाशोबभूवकथंभूतात्त्वत्तः । क्रतुषुयागेषुफलदानेफ
लसंपादनेव्यसनिनःउत्सुकात् । त्वद्विमुखस्य दक्षस्येप्सितफलप्राप्तिर्नसंजातेतियुक्तमेतत् । ध्रुवंनिश्चितं
कर्तुर्यजमानस्यमखाःयागाः श्रद्धाविधुरंविश्वासरहितंयथाभवतितथा अभिचारायविपरीतार्थायभवंति २१ ॥ ७ ॥
प्रजानाथमिति।नाथेत्यादिना आखेटवृत्तिंदर्शयति।हेनाथ हेस्वामिन् । तवमृगव्याधरभसः आखेटकोत्साहः

अमुंप्रजानाथंब्रह्माणंअद्यापिनत्यजति । कथंभूतस्यतेतवधनुष्पाणेः । कथंभूतंप्रजानाथं । प्रसभंबलात्का रेणरोहिद्भूतांमृगीजातांस्वांदुहितरंप्रति ऋष्यस्यवपुषामृगस्यशरीरेणगतं। किंकर्तुमिच्छुंरिरमयिषुं रमणंकर्तु मिच्छुं।पुनःकथंभूतंअभिकंकामुकं।पुनःकथंभूतंसपत्राकृतंतववाणाभिघातव्यथितंसपत्रंशरमस्यशरीरेप्रवेशि तमित्यर्थः।अपरंकथंभूतं।त्रसंतंभीतंचकितमितियावत्।अतएवदिवमपियातंगतं । ब्रह्माऽतिकामुकत्वेनमृगी

प्रजानाथंनाथप्रसभमभिकंस्वांदुहितरंगतंरोहिद्भूतांरिरमयिषुमृष्यस्यवपुषा ॥
धनुष्पाणेर्यातंदिवमपिसपत्राकृतममुंत्रसंतंतेऽद्यापित्यजतिनमृगव्याधरभसः ॥ २२ ॥
स्वलावण्याशंसाधृतधनुषमन्हायतृणवत्पुरःप्लुष्टंदृष्ट्वापुरमथनपुष्पायुधमपि ॥
यदिस्त्रैणंदेवीयमनिरतदेहार्द्धघटनादवैतित्वामद्धाबतवरदमुग्धायुवतयः ॥ २३ ॥

भूतांस्वसुतांमृगरूपेणरंतुंगतः। अतोअधर्माणमेनंशरेणहंतुमीश्वरोमृगयुर्भूत्वाऽद्यापिअनुयातीत्यर्थः ॥ २२ ॥ स्वलावण्येति । हेपुरमथन हेत्रिपुरदहन । अन्हायशीघ्रं तृणवत्प्लुष्टंदग्धं धृतधनुषंगृहीतचापं पुष्पायुधंमद नं पुरोअग्रतोदृष्ट्वापि देवीगौरी यमनिरतदेहार्द्धघटनातशरीरार्द्धयोजनात् त्वांयदिस्त्रैणंस्त्रीलंपटंअवैतिजान ति। तर्हिहेवरद बतइतिखेदे अद्धानिश्चितं युवतयः स्त्रियोमुग्धाःअज्ञानाः। अहो किंभूतागौरी स्वलाव ण्याशंसा आत्मसौंदर्यकीर्तयंती ।स्वकीयरूपाभिमानिनीत्यर्थः ॥ २३॥ श्मशानेष्विति । हेस्मरहर। तवश्म

 शानेषुपितृकाननेषु आसमंतात् क्रीडाविहरणं तथा पिशाचाः सहचराः सहवासिनः तथा चिताभस्माले 
पः मृतशरीरदहनायदग्धकाष्ठनिचयश्चितातत्रभस्मभसितं तस्यआलेपः अनुलेपनं अंगरागइतियावत् । त
 था स्रगपिमालापि नृकरोटीपरिकरः नृकपालसमूहः । नामइतिसंबोधने । हेवरद एवंपूर्वोक्तप्रकारेणतव अ
खिलंसमग्रं शीलंस्वभावःअमंगल्यंअशुभंभवतु । पुनस्तथापिस्मर्तॄणांचिंतकानांभक्तानां त्वंपरममुत्कृष्टंमंगल
मसि ॥ २४ ॥ मनइति । हेभगवन् यमिनोयोगिनः अंतरात्मनिकिमपितत्वमालोक्य सच्चिदानंदरूपं प्र

श्मशानेष्वाक्रीडास्मरहरपिशाचाःसहचराश्चिताभस्मालेपःस्रगपिनृकरोटीपरिकरः ॥
अमंगल्यंशीलंतवभवतुनामैवमखिलंतथापिस्मर्तॄणांवरदपरमंमंगलमसि ॥ २४ ॥
मनःप्रत्यक्चित्तेसविधमवधायात्तमरुतःप्रहृष्यद्रोमाणःप्रमदसलिलोत्संगितदृशः ॥

त्यक्षगोचरंवस्तुदृष्ट्वा आल्हादंसुखंदधतिधारयंति । किंकृत्वेव अमृतमये अमृतस्वरूपेऽन्हृदे जलाशयेनिमज्ज्ये
व मङ्क्त्वेव । यत्तत्त्वंतद्भवान्त्वमेव । किलशब्दःप्रसिद्धौ । किंकृत्वा प्रत्यग्विषयेभ्योनिवृत्तचित्तंतस्मिन्
आत्मनि मनोंतःकरणं सविधंसप्रकारंयोगशास्त्रोक्तंयथाभवतितथा अवधायावस्थाप्य । किंभूताःयमिनः ।
आत्तमरुतः आत्ताःगृहीताः मरुतः प्राणादिवायवोयैस्तेतथा । प्रहृष्यद्रोमाणः प्रहृष्यंतिपुलकितानिरोमा 
णितनूरुहाणियेषांते तथा । प्रमदसलिलोत्संगितदृशः प्रमदसलिलानिहर्षाश्रूणितैरुत्संगितापरिप्लुतादृष्टिर्ये

षांते तथोक्ताः ॥२५॥ त्वमर्कइति । हेभगवन् त्वंअर्कःसूर्योसि। त्वंसोमःचंद्रोसि। त्वंपवनोवायुरसि । त्वं हुतवहोऽग्निरसि।त्वमापःउदकमसि। त्वं उइतिवितर्के धरणिर्भूरसि । त्वमात्मासर्वसाक्षी परमात्मासि । इ तिचइतिशब्दः समाप्तौवर्तते। हे देवाधिदेव परिणताः परिपक्कमतयस्त्वत्स्वरूपविदस्त्वयिविषये एवंपूर्वो क्तप्रकारेणपरिच्छिन्नांइयत्तावधारितांइयत्ताकलितांगिरंवाणींबिभ्रतु पुनरिहजगतिवयंतत्तत्त्वंनविद्मःयत्तत्त्वं वस्तुत्वंनभवसि अतोयत्किंचित्सद्वाअसत्तत्सर्वं भवतारकोभवान् । भवद्व्यतिरिक्तंकिंचिन्नास्तीतितात्प

यदालोक्याल्हादं-ह्रदइवनिमज्यामृतमयेदधत्यंतस्तत्त्वंकिमपियमिनस्तत्किलभवान् २५

त्वमर्कस्त्वंसोमस्त्वमसिपवनस्त्वंहुतवहस्त्वमापस्त्वंव्योमत्वमुधरणिरात्मात्वमितिच ॥

परिच्छिन्नामेवंत्वयिपरिणताबिभ्रतुगिरंनविद्मस्तत्तत्त्वंवयमिहतुयत्त्वंनभवसि ॥ २६ ॥

र्यार्थः ॥२६॥ हेशरणद । ओमितिपदं त्वांगृणातिस्तौति । कथंभूतं ओमितिपदं। सर्वरूपेणसमस्तंव्यापकं खंडरूपेणाक्षरविभागेनव्यस्तंव्याप्यं। पुनःकिंभूतम्। अकाराद्यैरकारोकारमधारैस्त्रिभिर्वर्णैरेतान्यभिदधत् । एतानिकानि ।त्रयींऋग्यजुःसामानि तिस्रोवृत्तीःउदात्तानुदात्तस्वरितान् त्रिभुवनंत्रैलोक्यं।अथोऽनंतरं त्री नपिसुरान्ब्रह्मविष्णुरुद्रान् । अकारेण ऋगुदात्तस्वर्गब्रह्माणः अभिधीयंते । तथा उकारेण सामानुदात्तमर्त्य विष्णवोऽभिधीयंते। तथामकारेण यजुर्वेदस्वरितपाताळरुद्रा अभिधीयंते । पुनः किंविधमोंकारं। तेतवतुरीयं

धामस्थानं। तेजोवाअणुभिरतिसूक्ष्मैर्ध्वनिभिरवरुंधानंव्याप्नुवत। तेतवतुरीयंधामेतिहृदयात्कंठावधिर्यावत
जाग्रदवस्थायाः व्याप्तिः। कंठात्तालुपर्यंतंस्वप्नावस्थाया व्याप्तिः। तत्तात्वादिललाटपर्यंतंसुषुप्त्यवस्थाया
व्याप्तिः। ललाटात्कुंडलिनींव्याप्यशिवतत्त्वंयावत्तुर्यावस्थाया व्याप्तिः। तत्रानाहतोनादोमुक्तिदःपरिकी
र्तितः। कथंभूतंतुरीयंधाम। तीर्णाविकृतिर्येनतत्तथोक्तंनिर्विकारमित्यर्थः ॥ २७ ॥ भवइति। हेदेव यत्इदंतव

त्रयींतिस्रोवृत्तीस्त्रिभुवनमथोत्रीनपिसुरानकाराद्यैर्वर्णैस्त्रिभिरभिदधत्तीर्णविकृति ॥
तुरीयंतेधामध्वनिभिरवरुंधानमणुभिःसमस्तंव्यस्तंत्वांशरणदगृणात्योमितिपदं ॥ २७॥
भवःशर्वोरुद्रःपशुपतिरथोग्रःसहमहांस्तथाभीमेशानावितियदभिधानाष्टकमिदं ॥
अमुष्मिन्प्रत्येकंप्रविचरतिदेवश्रुतिरपिप्रियायास्मैधाम्नेप्रणिहितनमस्योस्मिभवते ॥२८॥

भवाद्यभिधानाष्टकं अमुष्मिन्नामाष्टके श्रुतिर्वेदः प्रत्येकंएकमेकंप्रतिप्रविचरति। तत्किं अभिधानाष्टकं तदे
वाह। भवःशर्वोरुद्रः पशुपतिः अथानंतरं उग्रः सहमहान् सहमहच्छब्देनमहादेवउच्यते। तथाभीमेशानौ
इतिहेतोः प्रियायास्मै धाम्ने पूर्वश्लोकप्रतिपादिताय तेजोरूपायभवतेतुभ्यं प्रणिहितनमस्योस्मि कृतनम ॥ ९ ॥
स्करोस्मि अथवा हेभव तेतवप्रियायास्मैधाम्नेतुरीयतेजसे प्रणिहितनमस्योस्मि ॥ २८ ॥ नमोनेदिष्ठाये

ति। अधिकतमायशिवाय निकटवर्तिनेतुभ्यं नम इत्यर्थः। हेप्रियदव प्रियोदवोवनंयस्यसः प्रियदवः तस्यसं बुद्धौ दविष्ठायदुस्तराय अतिदूरस्थायेतियावत्। नमः क्षोदिष्ठाय क्षुद्रतरायनमः। हेस्मर महिष्ठायमहत्तमा यनमः। तथाच वर्षिष्ठाय वृद्धतरायनमः। हेत्रिनयन यविष्ठाय युवतरायतरुणायचनमः। तथा सर्वस्मैतेन मः। तथा अतिसर्वाय सर्वमतिक्रांतायतुभ्यंतदिदंनमः। अयंनमस्कारइत्यर्थः॥ २९ ॥ बहुलरजसइति।

नमोनेदिष्ठायप्रियदवदविष्ठायचनमोनमःक्षोदिष्ठायस्मरहरमहिष्ठायचनमः॥
नमोवर्षिष्ठायत्रिनयनयविष्ठायचनमोनमःसर्वस्मैतेतदिदमतिसर्वायचनमः॥ २९ ॥
बहुलरजसेविश्वोत्पत्तौभवायनमोनमःप्रबलतमसेतत्संहारेहरायनमोनमः॥
जनसुखकृतेसत्वोत्पत्तौमृडायनमोनमःप्रमहसिपदेनिस्त्रैगुण्येशिवायनमोनमः॥ ३० ॥

हेभगवन् विश्वोत्पत्तौजगत्सृष्टिकर्तव्यतायां बहुलरजसे अधिकरजोगुणायभवायनमोनमः। तत्संहारेजग न्नाशे प्रबलतमसे अधिकतमोगुणायहरायनमोनमः। सत्वोत्पत्तौसत्यां जगत्पालनगुणोद्रेकेसति जनसु खकृते जनहितकरायमृडायनमोनमः। मृडसुखइत्यस्यधातोः कर्तरिमृडरूपम्। तथा प्रमहसिपदेनिस्त्रैगु- ण्ये प्रकृष्टतेजःपुंजरूपे गुणत्रयातीते मुक्तिस्थानेशिवायमंगलरूपायनमोनमः। नमोनमइत्यत्र भक्त्यति- शयेनवीप्सायांद्विर्वचनम्॥ ३० ॥ हेवरद इदंमदीयंचेतः मानसं क। किंभूतं। कृशपरिणति कृशापरिणतिः

परिणामोयस्यतत्। स्वप्नविचारगोचरमित्यर्थः। तथा क्लेशवश्यंदुःखपराधीनं। तवऋद्धिः महिमाक्क। किंभूता ऋद्धिः शश्वत्सर्वदागुणसीमोल्लंघिनी गुणमर्यादातिक्रांता अविनाशिनी। इत्यमुनाप्रकारेण चकितंभीतंमांते तवचरणयोर्भक्तिः अमंदीकृत्य भीतिरहितंकृत्वा वाक्यपुष्पोपहारं आधात् वाक्यान्येवपुष्पाणितेषांउपहारंपूजामकल्पयत्। क्लेशशब्देनपंचक्लेशास्तानेवाह। अविद्याऽस्मितारागद्वेषाभिनिवेशास्तेषांवश्यं। विपरीत

कृशपरिणतिचेतःक्लेशवश्यंक्कचेदंक्कचतवगुणसीमोल्लंघिनीशश्वदृद्धिः ॥
इतिचकितममंदीकृत्यमांभक्तिराधाद्वरदचरणयोस्तेवाक्यपुष्पोपहारम् ॥ ३१ ॥
असितगिरिसमंस्यात्कज्जलंसिंधुपात्रेसुरतरुवरशाखालेखनीपत्रमुर्वी ॥
लिखतियदिगृहीत्वाशारदासार्वकालंतदपितवगुणानामीशपारंनयाति ॥ ३२ ॥

ज्ञानमविद्या भिन्नयोर्बुद्ध्यात्मनोरेकत्रप्रीतिःअस्मिता सुखेष्वासक्तिः रागः दुःखेष्वप्रीतिःद्वेषः अनुभूतादपिमरणादेस्त्रासोऽभिनिवेशइतिक्लेशाः॥ ३१ ॥ असितेति। हेईश हेस्वामिन्। असितगिरिसमंनीलंगिरितुल्यंकज्जलंअंजनंस्यात्। क्वसिंधुपात्रे। यदिसुरतरुवरशाखालेखनीस्यात्। यदि शारदासरस्वती उर्वीपत्रं गृहीत्वासार्वकालंलिखति तदपि तवगुणानांपारंअंतं नयातिनप्राप्नोति॥ ३२ ॥ छात्राणांसुखबोधायनानाटीकानुसारतः। इयंकोमलरामेणकृताटीकासुबोधिनी ॥ १ ॥ इतिमहिम्नःस्तोत्रस्यसुबोधिनीटीकासमाप्ता ॥ ॥

अग्रेसुगमत्वान्मूलमेवलिख्यते । असुरेत्याद्यारभ्यभूतपतिर्महेशइतिसमाप्तिपर्यंतम् ॥ ॐनमःशिवाय ॥ असुरसुरमुनींद्रैरर्चितस्येंदुमौलेर्ग्रथितगुणमहिम्नोनिर्गुणस्येश्वरस्य॥ सकलगुणवरिष्ठःपुष्पदंताभिधानोरुचिरमलघुवृत्तैःस्तोत्रमेतच्चकार ॥ ३३॥ अहरहरनवद्यंधूर्जटेस्तोत्रमेतत् पठतिपरमभक्त्याशुद्धचित्तःपुमान्यः ॥ सभवतिशिवलोकेरुद्रतुल्यस्तथाऽत्रप्रचुरतरधनायुःपुत्रवान्कीर्तिमांश्च ॥ ३४ ॥ दीक्षादानंतपस्तीर्थंज्ञानंयागादिकाःक्रियाः ॥ महिम्नःस्तवपाठस्यकलांनार्हंतिषोडशीम् ॥ ३५ ॥ आसमाप्तमिदंस्तोत्रंपुण्यंगंधर्वभाषितं ॥ अनूपममनोहारिशिवमीश्वरवर्णनम् ॥ ३६ ॥ महेशान्नापरोदेवोमहिम्नान्नोपरास्तुतिः ॥ अघोरान्नापरोमंत्रोनास्तितत्त्वंगुरोःपरम् ॥३७॥ कुसुमदशननामासर्वगंधर्वराजःशिशुशशिधरमौलेर्देवदेवस्यदासः॥ सगुरुनिजमहिम्नोभ्रष्टएवास्यरोषात्स्तवनमिदमकार्षीद्दिव्यदिव्यंमहिम्नः ॥ ३८ ॥ सुरवरमुनिपूज्यंस्वर्गमोक्षैकहेतुंपठतियदिमनुष्यःप्रांजलिर्नान्यचेताः ॥ व्रजतिशिवसमीपंकिन्नरैःस्तूयमानःस्तवनमिदममोघंपुष्पदंतप्रणीतम् ॥ ३९ ॥ श्रीपुष्पदंतमुखपंकजनिर्गतेनस्तोत्रेणकिल्बिषहरेणहरप्रियेण ॥ कंठस्थितेनपठितेनसमाहितेनसुप्रीणितोभवतिभूतपतिर्महेशः ॥ ४० ॥ इतिश्रीपुष्पदंताचार्यविरचितंमहिम्नःस्तोत्रंसंपूर्णं ॥ श्रीसांबसदाशिवार्पणमस्तु ॥

॥ हें पुस्तक मुंबईंत बापूहरशेट देवळेकर यांणीं आपल्या छापखान्यांत छापिलें ॥ ॥ शके १८१४ नंदननामसंवत्सरे वैशाखशुद्ध १५ सौम्यवासरे

